॥ श्रीः ॥

॥ श्रीहयवदनाय नमः ॥

॥ श्रीमद्भाविसमीरवादिराजगुरुभ्यो नमः ॥

# उपन्यासरत्नमाला ।

---

श्रीशं प्रणम्य व्यास तं वाणीशं च गुरून्गुरुम् ।
करोम्युपन्यासरत्नमालां श्रीवल्लभप्रियाम् ॥

श्रीरुग्मिणीशविजयस्थकृष्णस्तुतिरूपगोपीवाक्यात्मकश्लोकद्वयस्य द्वावुपन्यासौ,
प्रमाणपद्धत्युपयुक्तास्सप्तोपन्यासाः, मायावादखण्डनोपयोग्येकः
एवं दशोपन्यासाः दशप्रमतिप्रीत्यर्थं बालानां बुद्धिवैशद्याय च संगृह्यन्ते* ।

★

## प्रथमोपन्यासः ।

कमलासनाच्च भवतोऽभवतो महतीन्दिरा किल तया त्वया ।
तरुवद्भवान्परिवृतोऽरिवृतोदयदाव सेदमनु ते मनुते ॥ (रु. वि. ८-२९)

जडाजडमुक्तामुक्तसकलप्रपञ्चात्सविस्तरं श्रियो महत्त्वं निरूप्य तस्याश्च पतित्वेन हरेर्निरवधिकमहत्त्वं प्रतिपादयितुमिदं पद्य प्रवृत्तम् । **भवतः** त्वत्तः, **भवतः** जायमानात् भवान् न भवतीत्यभवान् तस्मात्, **अभवतः** भवव्यतिरिक्तात्, **कमलासनात्** ब्रह्मणः, **कमलासनाद्भवतः** जायमानात् । **अभवतः** भवव्यतिरिक्तात् **भवतः** शिवात् । ब्रह्मशिवाख्यतदन्तर्यामिभगवद्रूपद्वयव्यवच्छेदायोभयत्राप्यभवत इति विशेषणम् । अनेन ब्रह्मा स्वान्तर्यामिब्रह्मरूपाद्भिन्नः तत्पुत्रत्वात्, शिवः स्वान्तर्यामिशिवरूपाद्भिन्नः तत्पौत्रत्वादित्यनुमानद्वयं ब्रह्मशिवयो-

---

* एवं श्रीमद्भाविसमीरगुरुवरेण्यैरेव स्वकृतोपन्यासरत्नमालायां दशोपन्यासानां प्रतिज्ञातत्वेऽप्यस्माकं त्रयाणामेवोपलम्भेन त्रय एव मुद्राप्यन्ते. इतरोपन्यासाः यैरुपलब्धास्ते तान् सम्प्रेष्यानुगृह्णीयुः. श्रीगुरुवरानुग्रहपात्रीभवेयुरिति चाशास्त इयं समितिः.

रुक्तस्वस्वान्तर्यामिरूपाद्भिन्नत्वे प्रमाणं सूचितम् । 'तत्सृष्ट्वा तदेवानुप्राविश'दिति श्रुतेः (तै.उ. २–१४)। 'शम्भोः पितामहो ब्रह्मपिता शक्राद्यधीश्वरः' (पा.पु.वा.स) इति स्मृतेः । स्वस्वस्रष्टृमूलरूपस्यैवोभयत्रापि प्रवेशान्नासिद्धो हेतुः । **कमलायाः** लक्ष्म्या **आसनात्** पत्या सह शयने शय्यारूपाच्छेषात् । 'भू प्राप्ता'विति धातोः **भवतः** गच्छतः **भवतः** तव षष्ठ्यर्थभूतवाहकभावेन विद्यमानाद्गरुडात् कानां जलानां मलेन फेनेन अस्यति निरस्यति शत्रुमिति **कमलासनः** इन्द्रः तस्मात् "अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयत्"(ऋ. ५–१–१६) इति श्रुतेः । **भवतः** त्वत्तो, **भवतो** जायमानात् कामात् **कमलासनात्** 'पद्मासनं पद्मकर'मिति श्रुत्या पद्मविष्टर-सूर्यात् कमलम् अस्यति मुद्रणप्रापणेन निरस्यतीति, **कमलासनात्** चन्द्रात् । **भवतो भवतः** शिवाद्भवतः जायमानाद्विनायकात् षण्मुखाच्च **कमलासनात्** ब्रह्मणः, **भवतः** जायमानान्मरीचेः **भवतो** जायमानात्कश्यपात्, **भवतः** तव, मनोऽनुकूलतया विद्यमानात् देवनागादिसमूहात् **भवतः** तव, **अभवतः** अननुकूलात् दैत्यादिदुर्जीवसमूहाच्च उक्तव्युत्पत्त्या **कमलासनात्** सूर्यात्, **भवतो** जायमानात् **कमलासनात्** चन्द्राच्च **भवतः** जायमानात्, उभयवंशजातचक्रवर्तिसमूहादित्यर्थः । **कमलासनाद्भवतः** जायमानाद्वसिष्ठनारदादिऋषिसमूहात् **कमलासनात्** ब्रह्मणः उक्तव्युत्पत्या, **कमलासनात्** सूर्याच्च **भवतः** जायमानान्मनुसमूहात् तस्माद्भवतो जायमानान्मानवसमूहाच्च **भवतः** शिवात्, **भवतः** जायमानात्पिशाचसमूहाच्च **भवतः** त्वत्तः, **कमलासनाच्च भवतो भवतः** प्रतिकल्पं जायमानान्महदहङ्कारादेः पातालरसातलादेश्च जडप्रपञ्चात् **कमलासनात्** ब्रह्मणः, भवतश्च, **अभवतः** अजायमानात् अपौरुषेयवेदादेः **कमलासनात्** कमलासनान्निमित्तात्, तदर्थमित्यर्थः । **भवतः** मूलरूपाद्व्यासादिरूपाच्च **भवतः** जायमानात्पञ्चरात्रभारतपुराणब्रह्मसूत्रादिपौरुषेयग्रन्थसमूहात् । **कमलायाः** सम्पदः **असनात्** निरसनात्, वैराग्यादित्यर्थः कशब्दवाच्यशिरसो मलभूतकेशानाम् **असनात्** निरसनात् सन्न्यासाश्रमग्रहणादिति यावत् । मुक्तियोग्यजीवेषु यथायोग्यं वैराग्यसम्पत्तेरनन्तरमिति भावः । **भवतः** त्वत्तः, त्वदाज्ञयेत्यर्थः । **भवतः** भूमौ जायमानात् **कमलासनात्** उक्तविधया विरक्ताद्यतिरूपिणो



भाविब्रह्मणो मध्वाद् **भवतः** जायमानस्य तत्कृतभाष्यादिग्रन्थस्य **भवतः** अनुभवितृगणादित्यर्थः "कानीन्द्रियाणी"ति श्रुतेः **कमलासनात्** कशब्दवाच्यमनोमलभूतमिथ्याज्ञाननिरसनान्मननादित्यर्थः । ल्यब्लोपनिमित्तपञ्चमीमपेक्ष्य **कमलासनात्** कमलासनं, **भवतः** भवं **भवतः** शिवात् **भवतः** भवन्तं जायमानं, षण्मुखविनायकादिकं परदेवतात्वेनानङ्गीकृत्य च गुरुत्वेनाङ्गीकृत्य च भवत एव भवतः परदेवतात्वेनानुभवान् **कमलासनात्** कमलाया विष्टरस्थानीयवक्षस्स्थलान्नारायणात् प्रसिद्धकमलासनाच्च गुरोः **भवतः** जायमानात **भवतस्तव भवतः** भवात् भक्तेर्भावनाख्यध्यानात् प्राप्त्यर्थधातोर्ज्ञानार्थत्वात्, **भवतः** अपरोक्षज्ञानाच्च **भवतो** जायमानात्, **कमलासनात्** कशब्दवाच्यमौक्तसुखस्य मलरूपदुःखादर्कसांसारिकसुखनिरसनादनन्तरं **भवतः** तव **भवतः** सायुज्यसामीप्यादिसम्बन्धवत्तया जायमानाद्यथायोग्यं चतुर्विधमुक्तेः पात्रीभूतादिति भावः । **अभवतः** न विद्यते भवः संसारो यस्येति व्युत्पत्या मुक्तात् प्रागुक्तव्युत्पत्त्यैव कमलासनादिशब्दवाच्यान्मुक्तब्रह्मादिसज्जीवादिसमूहादिति यावत् । एवं चान्तर्बहिर्वर्तिप्रपञ्चप्रतीतत्वादभूतपूर्वत्रैविक्रमपदत्रयोपममिदं पदत्रयमिति ज्ञातव्यम् ।

**इन्दिरा** लक्ष्मीः, **महती किल** विष्णुव्यतिरिक्तचेतनाचेतनात्मकसकलप्रपञ्चादभ्यधिकेत्यर्थः । हे **अरिघ्नतोदयदाव** कृष्ण इतरावध्यकंसादिवधेनापि भगवतस्सर्वोत्तमत्वादिसूचनायेदं विशेषणम् । लतया तरुवत् **तया** लक्ष्म्या भवान् **परिवृतः** परितः सर्वतो वृतः अवतारादिष्वपि सेवालोलुपा सा त्वां न मुञ्चतीत्यर्थः । गुणत्रयादुपरि व्याप्ताव्याकृतमहाकायस्य हरेः श्रीरेव कटकमुकुटाद्याकारेण सर्वाङ्गमावृत्य तिष्ठतीति सूचयितुं परिवृत इत्युक्तम् । तरुदृष्टान्तेन 'यस्यांघ्रिरेणुं जुषतोऽनभीप्सो'रिति स्मृत्युक्तं भगवतो नैरपेक्ष्यं सूच्यते ।

एवं च सकलजगदुत्तमलक्ष्मीतत्वादप्युत्तमत्वाद्भगवानेव निरवधिकसर्वोत्तम इति गोपीनां हृदयम् । किलेत्यनेनास्मिन्नर्थेऽम्भ्रणीसूक्तवर्गद्वयं, "मयापि बाल्ये स्वपितुः प्रजा दृष्टा बुभुक्षिताः । दुःखादशक्ताः सम्प्राप्य श्रियमाराध्य वै वृताः ॥ तया संवर्धिताभ्यश्च प्रजाभ्यो भवदादयः । विलसन्तीशशक्राद्याः ससुहृन्मित्रबान्धवाः ॥ त्वया विना क्व देवत्वं कैश्वर्यं क्व परिग्रहः । सर्वे भवन्ति जीवन्तो

यातनास्त्विह संस्थिताः ॥ तामृते नैव धर्मोऽथः काममोक्षौ विदूरतः । क्षुधितानां दुर्भगानां कुतो योगसमाधयः ॥ सा च संसारसारैका सर्वलोकैकनायकी । वशगा कमला यस्य त्यक्त्वा त्वामपि शङ्कर ॥ अनौद्धत्येन शौचेन रूपेणाऽऽर्जवसम्पदा । सर्वातिशायिवीर्येण सम्पूर्णस्य महात्मनः ॥ कस्तेन समतामेति देवदेवेन विष्णुना । यस्यांशांशावतारेण विना सद्यो विलीयते ॥ जगदेतत्तथाप्याहुर्दोषानस्य विमोहिताः । नास्य जन्म जरा मृत्युर्नाप्राप्यं स्वार्थ एव वा ॥'' (पद्मपुराणे)

इति वासुदेवसहस्रनाम्नि पार्वतीवचनरूपस्मृतिं च सूचयति । तत्राम्भ्रणीसूक्तस्य लक्ष्मीसूक्तत्वे निरुक्तमेव प्रमाणयन्तो यथाशक्ति सूक्तार्थं वदामः । 'अम्भ्रणीवागात्मानं तुष्टावे'ति निरुक्तात् अं परमात्मानं स्वहृदि स्वाभिमन्यमानवेदप्रतिपाद्यत्वेन च बिभर्ति । 'वेदगर्भो विभुर्विष्णुः श्रीमांस्त्रैलोक्यभूषण' इति विष्णुनामसु पाठात् अं बिभर्ति नयति चेति विग्रहः । नयति वेदाध्येतृसज्जनमनस्सु चेति अम्भ्रणीशब्दवाच्या वाग्वेदाभिमानिनी लक्ष्मीरात्मानं तुष्टाव । 'अ इति ब्रह्मे'ति श्रुतेः । 'भृञ् भरणे, णीञ् प्रापणे' इति धातोश्च नापूर्वोऽयमर्थः । रूढ्या अम्भ्रणीशब्दवाच्यदेवतायाः काप्यप्रसिद्धेः । उक्तयोगाश्रयणेन श्रीरेवात्र प्रतिपाद्या नतु सरस्वती । अम्भ्रणीशब्दविरोधात् । सरस्वत्यादेः ब्रह्मलयेऽपि विद्यमानवेदाभिमानित्वायोगात् । तं ब्रह्माणं कृणोमि । अस्य जगतः पितरं स्रष्टारं चतुर्मुखं, मूर्धन् मूर्ध्नि, सर्वलोकोपरिस्थितसत्यलोकपरिपालनाय । तादर्थ्ये सप्तमी । सुवे=योनिद्वारा सृजामि अप्स्वन्तः=समुद्रोदकमध्ये । मम योनिः=भरणादौ हेतुभूतो भर्ता नारायणस्तिष्ठति इत्यादिवक्ष्यमाणसूक्तस्थबह्वर्थानां लक्ष्म्या अन्यत्रायोगाच्च ।

अहं रुद्रेभिः=एकादशरुद्रैः वेदोक्तसकलरुद्रपरिग्रहाय छान्दसः प्रयोगः । वसुभिः=अष्टवसुभिः सहचरामीत्येकान्वयः । अत्र बहुमूर्तेस्स्वस्याः प्रत्येकं मूर्तावपि सहसञ्चारसूचनाय द्विरह पदप्रयोगः । आदित्यैर्विश्वेदेवैश्च सह चरामि । मम सञ्चारसमये एते सर्वे ममानुचरा इति भावः । मित्रावरुणा=मित्रावरुणौ उभा=उभाविन्द्राग्नी उभा=उभौ अश्विना=अश्विनौ च बिभर्मि ॥ १ ॥ आहनसं=आ समन्तात् हन्यत इति आहनाः आ समन्ताद्धन्यमानसोमलताभिमानिनमि-



त्यर्थः । सोमं=चन्द्रं त्वष्टारं=विश्वकर्माणं त्वष्टृनामकसूर्यं वा पूषणमुत=पूषणं च भगं भगनामकं च एतावपि सूर्यौ । विष्टिगृहीतानां पूर्वऋच्युक्तरुद्रादीनां न मया सह सञ्चरणम् । किंतु धनदानादिना पोषितानामेवेति सूचनाय बिभर्मीत्युत्तरर्च्यपि प्रागादित्यशब्दोक्तपूषादीनामेव सर्वोपलक्षकतया पुनर्वचनम् । अत्रैवोक्तेन्द्रादीनां च पाल्यत्वादेव लक्ष्म्यनुचरत्वं ज्ञेयम् । भरणं च नाधाराधेयभावेन, किंतु द्रव्यदानेन चेत्याह अहमिति । सुप्राव्ये=सुष्ठु प्रकर्षेण राजादिभ्योऽप्यतिशयेनान्तरपि स्थित्वेत्यर्थः अव्ये=रक्षणयोग्ये इति लोकत्रयसंग्राहकम् । प्रमामनुपमृद्यैव ददामीति सूचनाय लोक इत्यनुक्त्वा अव्य इत्युक्तम् । सुन्वते=सोमसवनं कुर्वते हविष्मते=यज्ञयोग्यबह्वन्नवते यजमानाय=ब्रह्मेन्द्रादिरूपयजमानाय द्रविणं दधामि "तृतीयोऽतिशय'' इति महाव्याकरणवचनादतिशयेन ददामि । दत्तं च 'डुधाञ् धारणपोषणयो' रिति धातोः, दधामि धारयामि चोरादिभय निवार्य रक्षामि वृद्ध्यादिना पोषयामि च ॥ २ ॥ राष्ट्रादेव द्रव्यसम्पत्तिः किं त्वयेत्याशङ्कां वारयितुमाह अहं राष्ट्रीति । अहं राष्ट्री=भूरूपेण राष्ट्राभिमानिनी वसूनां=धनधान्यरत्नादीनां सङ्गमनी=सम्यक्प्रापयन्ती यज्ञियानां वसूनां प्रथमा=आदिभूता चिकितुषी=कर्त्री पुण्यहेतुत्वात् यज्ञयोग्यवसूनामितरद्रव्येभ्योऽप्यादित एव कर्त्रीत्यर्थः । धनादिदानं च न त्रिविधजीवानामेकप्रकारेण किन्तु तत्तद्योग्यतामर्यादयेत्याह तामिति । याऽहं पुरुत्रा=पुरूणि ब्रह्मादिजगन्ति पालयन्ती, तां मा=मां, देवा भूरिस्थात्रां=भूरीणि द्रव्याणि स्थात्रीं स्थापयन्तीं, स्थिरीकुर्वाणां भूरि=बहुविधद्रव्यं आ=तेषां तेषां योग्यतामर्यादया वेशयन्तीं=तत्तद्गृहे प्रवेशयन्तीम् उत्तमानां गृहे चिरकालस्थायि, अधमानामल्पकालस्थायि, मिश्राणामुभयविधं च वेशयन्तीमित्यर्थः व्यदधुः=कृतवन्तः । "ऋते भवत्पादपरायणं न मां विदन्त्यहं त्वद्धृदया यतोऽजित'' (भा. ५. १८–२२) इति भागवतोक्तस्वाभिप्राय स्फोरयितुं आ इत्युपसर्गः ॥ ३ ॥ अत एव यो विरुद्धतया पश्यति मदुक्ततत्त्वाद्वैपरीत्येन पश्यति, यः प्राणिति=जीवनमात्रं कृत्वा तिष्ठति यः ईं=इत्थं उक्तं=मदुक्तं सकलं तत्त्वं शृणोति=शिष्यत्वेन शृणोति वाक्यखण्डत्रयस्य जीवत्रयपरत्वसूचनाय त्रिशोऽपि यच्छब्दग्रहणम् । स सर्वोऽपि मया अन्नमत्ति अयोग्यदत्तान्नस्य बहुकालासम्बन्धसूचनाय विसन्धीकरणम् ।

तस्यैवादावुक्तत्वात्तदेव स्पष्टयति मां अमन्तवः=अवमन्तारः, मां भगवदैश्वर्यं चाव-मन्तारो ये ते उप=समीपे क्षियन्ति=क्षयं प्राप्नुवन्ति अहं श्रद्धिवं=श्रद्धावद्भिः प्राप्यं वचनं 'वा गतिगन्धनयो'रिति धातोः ते=तव, वदामि । तत् त्वं श्रुधि=शृणु तटस्था अपि शृणुत ॥ ४ ॥ देवेभिः=देवैः मानुषेभिः=उत्तममानुषैश्च जुष्टं=इदं वचनं अहमेव स्वयं वदामि, नतु गीतापाठवदन्यवचनानुवादरूपमिदं येन वक्ष्यमाणमहिमा मम न सिद्ध्येदिति भावः । यं यमुग्रं रुद्रपदयोग्यं जीवम् उग्रं=रुद्रं, कर्तुं कामये तं तमिति वीप्साबलात्तु यं यमिति लभ्यते कृणोमीति विधायक पदमहिम्ना कर्तुमिति लभ्यते । कामनाकरणयोरेकविषयत्वादुग्रमित्यपि लभ्यते । तं तमुग्रं रुद्रं कृणोमि । 'उग्रः कपर्दी श्रीकण्ठ' इत्यभिधानात् । यं यं ब्रह्माणं ऋषिं सुमेधसं च कर्तुं कामये, तं तं ब्रह्माणमृषिं सुमेधसं च कृणोमीति योजना द्रष्टव्या । अतिसमर्थरुद्रब्रह्मादीनामप्युत्पादने स्थापने चाहमेव समर्थेति श्रियो भावः । स्वभर्तृसमतया प्रसिद्धरुद्रब्रह्मादीनां स्वतोऽप्यधःकरणात् स्वभर्तृभक्तैरत्या-दरणीयमिदमिति सूचनाय प्रागस्य प्रशंसा । अत एव न तुच्छार्थस्य प्रवेशः । रुद्रादि-सकलसुरसेव्यत्वप्रतिपादकपूर्ववाक्यान्यप्रस्तूयातिप्रशंसापूर्वकमुक्तेऽस्मिन्वाक्ये ततो-ऽप्यतिशयितार्थस्यैव वक्तव्यतया उग्रो रुद्र एव, ब्रह्मा चतुर्मुख एव, ऋषिः सर्वज्ञः सुमेधाः अपरोक्षज्ञानी परममुक्तो वा । अत एव सुमेधामिति शोभनमेधात्वोक्तिः । एवं च हरीतरसकलजगत्प्रवर्तकतयोक्तायाः स्वस्याः वक्ष्यमाणयोनिरपि हर्याख्य-परदेवतैव ॥ ५ ॥ अहं प्रलयकाले ब्रह्मद्विषे=ब्रह्मणः पञ्चमशिरच्छेत्रे, 'शॄ हिं-साया'मिति धातोः शरवे=जगत्संहर्त्रे । रुद्राय हन्तवे=हन्तुमेव । तुमर्थे 'सेसेन-सेऽसेन्क्सेकसेनध्यैऽध्यैन्कध्यैकध्यैन्शध्यैशध्यैन् तवैतवेङ्तवेन' इत्यनेन सूत्रेण तुमर्थे तवेन् प्रत्ययः । स्वकृतरुद्रहननानन्तरं कल्पान्तरे शेषपदप्राप्तावपि रुद्रपदस्य सर्वथा त्यागाद्धन्तुमेवेत्युक्तम् । महारुद्रस्यैव परिग्रहाय ब्रह्मद्विषे शरवे इति विशे-षणद्वयमुक्तम् । अतः प्रागुक्तरुद्रो महारुद्र एवेति ज्ञातव्यम् । ब्रह्मवधाज्जगद्वधाच्च मत्पत्युर्नारायणस्यैवालेपो न रुद्रस्येति सूचनाय विशेषणद्वयम् । एवं च महतां आत-द्रोहिणो हिंसा सर्वथा कार्येति सूचनाय वा हन्तुमेवेत्युक्तम् । धनुः नोमि=आकर्णमाकर्षयामि, अहं जनाय समदं=सन्तोषेण सहितं कैवल्यमपि



कृणोमि, द्यावापृथिवी=द्यावापृथिव्यौ, आ=सम्यक्, विवेश=अभिमानितया प्रविष्टाऽस्मि ॥ ६ ॥ अस्य पितरं=ब्रह्माणं, मूर्धन्=मूर्ध्नि अस्य जगतो मूर्ध्नि सत्यलोके, जगतो मूर्ध्नि धर्तुं योग्यं सर्वाग्रेसरमिति वाऽर्थः । अहं सुवे । समुद्रे अन्तः अप्सु मध्ये मम योनिरस्ति । स्वपतेर्वामतः उक्तसमस्तमहिमवत्या अपि मम सकल-चेष्टाकारणभूतः कश्चन पुरुषोत्तमोऽस्ति । अहमेव निरवधिकसर्वोत्तमा न भवामी-त्यर्थः । अभिमान्यभिमन्यमानयोः समुद्रजलयोरुभयोरप्याधारत्वोक्त्या सर्वान्त-र्यामी हरिरेव योनिरिति श्रियो हृदयम् । प्राग्वरुणस्य स्वपोष्यत्वोक्त्या च न तस्यात्र प्रवेशः । प्रलये स्वपतिना सह स्थितायाः स्वस्याः उत्पत्तेरेवासम्भवाच्च नान्यो योनिः । उतास्यामृचि वक्ष्यमाणसर्वाधारत्वादेरन्यत्रासम्भवाच्च साक्षात्स्वस्या अपि नियामको हरिरेव योनिः । हरेरेव स्वोक्तश्रुत्युक्तयोनित्वे हेत्वन्तरं चाह तत इति । विश्वा=विश्वानि मदादीनि, भुवना=भुवनानि, ततः=मम योनिभूतान्नारायणात् वितिष्ठे=विशेषेण तिष्ठे तस्थे तस्थिर इत्यर्थः । विशेषेण धृतान्यासन्नितियावत् । करतलमिलितामलकवल्लीलया धृतमिति सूचनायैकवचनान्तक्रियापदप्रयोगः । स्वात-न्त्र्येण धारणं तस्यैवेति सूचनाय वीत्युपसर्गः । अनु इत्यनेन स्वोक्तार्थस्य "एको दाधारे"ति श्रुत्यनुसारितां सूचयति । ननु त्वयापि सकलधारण क्रियते खल्वित्यत आह, अहं च अमूं पृथिवीं, द्यामुत=द्यां च वर्ष्मणा=देहेन उप=समीपे, स्पृशामि=भगवतैव धृते जगति निमित्तमात्रतया अहमपि स्पृष्ट्वा तिष्ठामि । धारकस्तु स एव । पूर्वोक्तः सर्वोऽपि मे महिमा स्वातन्त्र्येण मदन्तर्यामिणस्तस्यै-वेति भावः ॥ ७ ॥ तत्कृपया मयि 'अन्नं हि प्राण' इति श्रुतेरन्नवस्त्रहिरण्या-दिपदवाच्यायाः स्वस्याः प्राणाद्याधारत्वस्य स्पष्टमुक्तत्वात्प्राणपदप्रयोगादेव प्राणिनां प्राणाधीनत्वस्यैव सूचितत्वान्मम पुत्रस्य मुख्यप्राणस्यायं महिमा नान्यस्येत्याह । विश्वा भुवनानि कर्तुं धर्तुं हर्तुं चारभमाणा अहमेव वात इव मुख्यप्राण इव प्रवामि भगवद्दत्तयशसा जगत्प्रकर्षेण सुरभीकरोमि । 'वा गतिगन्धनयो'रिति धातुः । विष्णोः ब्रह्माद्युत्तमलक्ष्मीतत्वादप्युत्तमत्वेन निरवधिकसर्वोत्तमत्वम् । लक्ष्म्यादीनां चाल्पमहिमत्वेन तद्भृत्यतां च स्फोरयन्ती उपसंहरति पर इति । एना=अस्याः पृथिव्याः पृथिव्यभिमानिभूरूपादित्यर्थः । दिवा=दिवः द्युलोकाभिमानि-

श्रीरूपादित्यर्थः । 'सुपां सुपो भवन्ती'ति वचनात्तृतीया पञ्चम्यर्थे । ब्रह्माद्युत्तमः लक्ष्मीरूपपत्न्याः सर्वोत्तमत्वे पतिः सर्वोत्तम इति भगवदुत्तमत्वज्ञापने लिङ्गतया "ततो वितिष्ठ" इत्यादिना उपदेष्टृतया च करणत्वमपि ज्ञापयितुं तृतीया । स परमात्मा परः = उत्तमः । अहं तु महिना = महिम्ना एतावती बभूव = इयत्तापरिमाणवती बभूव । मदादयः सर्वेऽपि परिच्छिन्नज्ञानसुखादिगुणवन्तः भगवांस्तु निरवधिक-सकलगुणपरिपूर्ण इति वर्गद्वयाभिप्रायः । स्मृतेरर्थस्तु स्पष्ट एव ।

कृष्णस्य सर्वोत्तमत्वे लक्ष्मीमपि साक्षित्वेन प्रमाणयन्तीत्याहुः । सा इन्दिरा इदं जगत् ते = तव सकाशात्, अनु = अनन्तरं नीचमित्यर्थः मनुते = जानाति । इदं च "त्वं न्यस्तदण्डमुनिभिर्गदितानुभाव आत्माऽऽत्मदश्च जगतामिति मे वृतोऽसि । हित्वा भवद्भ्रुवदुदीरितकालगन्धध्वस्ताशिषोऽब्जभवनाकपतीन्कुतोऽन्यान् (भा. द. ७५-४३) नूनं तपो यत्र न मन्युनिग्रहो ज्ञान क्वचित्तच्च न सङ्गवर्जितम् । कश्चिन्महांस्तस्य न कामनिर्जयः स ईश्वरः किं परतोव्यपाश्रयः (भा. स्कं ८ अध्या८ श्लो.१९.)धर्मः क्वचित्तत्र न भूतसौहृदं त्यागः क्वचित्तच्च न मुक्तिकारणम् । वीर्यं न पुंसोऽस्त्यजवेगनिष्कृतं न हि द्वितीयो गुणसङ्गवर्जितः ॥ २० ॥ क्वचिच्चिरायुर्न हि शीलमङ्गलं क्वचित्तदप्यस्ति न वेद्यमायुषः । यतोऽभयं कुत्र च सोऽप्यमङ्गलः सुमङ्गलः कश्चन कांक्षते हि मां ॥ २१ ॥ एवं विमृश्याव्यभिचारिसद्गुणं पदं निजैकाश्रयिसद्गुणाश्रयम् । वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुन्दं निरपेक्षमीप्सितम् ॥ २२ ॥" इति भागवतवचनादुक्तसूक्ताच्चावगम्यते । जगतामात्मदः = आत्मानं त्रिविधजगत्स्वभावं अन्ते ददातीति तथोक्तः । अत एव "तनुभृत्स्वभाव सम्भूतय" इत्याहुः । आत्मा = परमात्मा 'स्वभावे परमात्मनि' इति वचनात् । त्वं भवतः = त्वत्तः, भवत् = जायमानं, उदीरितं = उदीरणं यस्य स तथोक्तः । तस्य कालस्य गन्धेन परनामनिमेषकाख्यलेशेन ध्वस्ता आशिषः अखिलैहिकसम्पदो येषां तान् अब्जो ब्रह्मा 'अद्भ्यः सम्भूतो हिरण्यगर्भ' इति वचनात्, भवः = शिवः नाकपतिः = इन्द्रः बहुवचनबलादेवमेवार्थो वक्तव्यः । हित्वा मे मया वृतोऽसि । अनेन अन्यान्हित्वा वृतोऽसीति । कुतः किं वक्तव्यमिति पूर्वश्लोकार्थः । अनेन स्वस्याः स्वैश्वर्यस्य भगवतो भगवदैश्वर्यस्य च महाप्रलयेऽपि नाशाभावं सूचयति ।



यत्र तपनं, यत्र दहनं, वसिष्ठविश्वामित्रादौ । तप सन्तापे, तप आलोचने, इति धातोरौष्ण्यरूपध्यानरूपं तपो नूनमस्ति मन्युनिग्रहो न । प्रलयकाले दहनतपनयोर्जगद्दाहकत्ववत् ऋषीणां शापादिदानेन च मन्युफलदर्शनादिति भावः । क्वचिद्=बृहस्पतिशुक्रादौ ज्ञानं=विद्याऽस्ति तज्ज्ञानं सङ्गेन=धनासक्त्या वर्जितं न । देवदानवपौरोहित्याश्रयणात् । कश्चित्=ब्रह्मा महान्=सकलजीवेभ्यः श्रेष्ठः । तस्य कामनिर्जयो न "वाचं दुहितरं तन्वीं स्वयम्भूर्हरतीं मनः । अकामां चकमे क्षत्तः सकाम इति नः श्रुतम्" ॥ (भा. तृ. १३–२८) इति भागवते अविहितस्वदुहितृकामदर्शनादिति भावः । व्यपगतोऽन्य आश्रयो यस्य सोऽयं व्यपाश्रयः । "रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः । ब्रह्मा मामाश्रितो नित्यं नाहं कञ्चिदुपाश्रितः" इति वचनात् इन्द्राद्याश्रयरुद्रादिवत् अयं आश्रय एव स्वयं पुनराश्रयान्तरसापेक्षो न भवतीति यावत् । परतः=परमपुरुषात् एतादृशो व्यपाश्रयो यस्य रुद्रस्य स परतो व्यपाश्रयः । स्वतन्त्रनारायणमाश्रित्य तद्बलेनैव स्ववैरिणं भस्मासुरं नाशयन् स्वात्मानं रक्षश्चेति यावत् । स रुद्र ईश्वरः किमु=ईश्वरशब्दवाच्यसर्वेश्वरत्ववान् किमु, नैव । भगवन्नामधारकतयैवायमीश्वरो नतु भगवानिव परममुख्यया वृत्त्या तच्छब्दवाच्य इति भावः । "मुमुचुः पुष्पवर्षाणि हते पापे वृकासुरे । देवर्षिपितृगन्धर्वा मोचितः सङ्कटाच्छिवः ॥ ३८ ॥ य एवमव्याकृतशक्त्युदन्वतः परस्य साक्षात्परमात्मनो हरेः । गिरीशमोक्षं कथयेच्छृणोति वा विमुच्यते संसृतिभिस्तथाऽरिभिः" ॥ ४१ ॥ (भा. द. ९२) इति भागवतवचनात्सिद्धोऽयमर्थः । क्वचित्=यमेऽपि धर्मोऽस्ति, धर्मराजत्वात् । भूतसौहृदं न । क्वचित्=मनुबल्यादौ त्यागः=स्वाधिकारसमाप्तौ मनूनामीश्वरभयादैश्वर्यत्यागः । बलेश्च वामनभयादन्यायार्जितत्रैलोक्यत्यागः । अत एव न मुक्तिकारणम् । अजः=कालः तस्य वेगेन निष्कृतं=अपरिहृतं, वीर्यं=सामर्थ्यं पुंसः=पुंमात्रस्य न । द्वितीयः=भगवतोऽन्यः, गुणसङ्गवर्जितः=गुणत्रयनिमित्तककामक्रोधलोभमोहादिदोषसङ्गवर्जितो नहि । इमौ दोषौ सकलचेतनसाधारणौ । क्वचित्=जगन्मारकमृत्युदेवे चिरायुरस्ति कल्पावसानपर्यन्तं सर्वमारकत्वेनावशेषितत्वात् शीलमङ्गलं=परोपकार दयालुत्वादिशीलं, दम्पत्योर्वैधव्यवैधुर्याद्यमङ्गलहेतुत्वान्मङ्गलं च नहि । क्वचित्=कामादौ तच्छीलं मङ्गलमस्ति पुत्रपौत्रादि-

वृद्धिहेतुत्वात् । आयुषः वेद्यं जातकादिना वेदनयोग्यं स्वरूपं न । इतरदेवेषु जीव-
त्स्वेवास्य शिवेन भस्मीकृतत्वात् । यतः=यत्र कुत्रचिच्चन्द्रादौ अभयं=घर्मश्रमादि-
ह्रणमस्ति, आह्लादहेतुत्वात् । सोऽप्यमङ्गलः=स्वोच्चबृहस्पतिदारधर्षणान्मङ्गलशून्यः
कश्चन=इन्द्रः सुमङ्गलो भवति । शतक्रतुत्वेन विधूतसकलपापत्वात् "इन्द्रो वृत्रं
हत्वा महानभवत्" इति हि श्रुतिः । सोऽपि मां कांक्षते, ऐश्वर्याभिवृद्ध्यर्थम् । ब्रह्मा-
दीनां सर्वेषां स्वसन्तानत्वात्, विष्णुभक्तत्वाच्च तेषु वात्सल्यवती तत्तद्दोषोद्घाटनसमये
विशिष्य न तन्नाम जग्राह इति ज्ञातव्यम् । एवमुक्तप्रकारेण रमा सर्वान्देवान्विमृश्य
एकैकगुणवत्त्वेऽपि गुणान्तररहितान् इतरसाधारणगुणवतश्च विचार्य अव्यभिचारि-
सद्गुणं प्रमेयत्वस्येव विवक्षितस्थलादन्यत्रापि वृत्तिरेको व्यभिचारः । कृतकत्वं
नित्यत्वं विनेव गुणान्तरं विहाय गुणान्तरस्याप्यवस्थितिरपरो व्यभिचारः ।
तदुभयव्यभिचाररहिता इतरसाधारण्येनावर्तमानाः सकलशुभगुणैः सहैव वर्तमानाश्च
सद्गुणा यस्य तं, अव्यभिचारिसद्गुणम् । एवमुक्तप्रकारेण भगवद्व्यतिरिक्तं लोके
क्वाप्यविद्यमानं विमृश्य निजैकाश्रयिसद्गुणाश्रयं निजैकाश्रयिणः=इतरसाधारण्यं
विना केवलं स्वस्मिन्नेव विद्यमानाः सद्गुणाः सर्वेश्वरत्वसर्वकर्तृत्वस्वतन्त्रत्वनिरवधि-
कसर्वज्ञत्वपूर्वा गुणाः तेषामाश्रयम् । ते च एकेनापि शुभगुणेन व्यभिचारवन्तो न
किन्तु सर्वगुणैरपेक्षितम् । भगवद्गुणानां चेतनत्वात् भगवानेवास्माकमाधारो
भवेत्, न त्वन्य इत्यपेक्षितम् । पदं=पद्यत इतिव्युत्पत्त्या उक्तद्विविधगुणवत्तया
वेदप्रतिपाद्यं मुकुन्दमेव अव्यभिचारिसद्गुणं = उक्तव्यभिचारद्वयरहितसद्गुणवन्तं
विमृश्य = निश्चित्य, निरपेक्षं = स्वस्मिन्नप्यपेक्षारहितं ईप्सितं = सर्वैरप्यपेक्षितं तमेव
वरं वव्रे इति योजना । तत्र "त्वं न्यस्तदण्डमुनिभि"रित्येकं पद्यं प्रणयकलहसमये
रुग्मिणीवाक्यम् । "नूनं तप" इत्यादिपद्यानि स्वयंवरस्थलक्ष्मीवाक्यानि । तत्राद्यपद्ये
स्वनाशस्वैश्वर्यनाशाख्यदोषद्वयेन स्वनीचत्वस्य रुग्मिणीरूपश्रियैव कथनात् ।
उत्तरपद्येषु तु ब्रह्मादिसकलदेवानामपि विविच्य कामक्रोधादिदोषग्रस्तत्वेन भगवत्स-
काशात्, नीचत्वस्य मूलरूपश्रियैव कथनाच्च "यद्धि मनसा ध्यायति तद्वाचा वदती"
ति प्रमितत्वात् सा इदं जगत् ते अनुमनुत इति गोपीभिरुक्तं युक्तमिति स्थितम् ॥

इति श्रीमद्भाविसमीरश्रीवादिराजपूज्यचरणविरचितः प्रथमोपन्यासस्समाप्तः ॥

॥ श्रीः ॥

॥ श्रीहयवदनाय नमः ॥

॥ श्रीमद्भाविसमीरवादिराजगुरुभ्यो नमः ॥

# उपन्यासरत्नमाला ।

## द्वितीयोपन्यासः ।

नारायणोऽगण्यगुणनित्यैकनिलयाकृतिः । अशेषदोषरहितः प्रीयतां कमला-
लय इत्याद्यश्लोकेन नारायणस्यागण्यगुणाश्रयत्वमाचार्यैरभिहितम् । तदयुक्तं "तत्त्व-
मसि" "अहं ब्रह्मास्मी"त्यादिश्रुतिभिः "अहं हरिः सर्वमिदं जनार्दन" इत्यादिस्मृति-
भिश्च जीवब्रह्मैक्यस्य तात्पर्येण प्रतिपादनात् । नारायणस्यागण्यगुणाश्रयत्वे जीवस्याल्प-
गुणाश्रयत्वे तयोर्विरुद्धधर्माधिकरणत्वापत्त्या विरुद्धधर्माधिकरणयोर्जीवब्रह्मणोर्जला-
नलयोरिवैक्यायोगात् श्रुतितात्पर्यविषयीभूतजीवब्रह्मैक्यान्यथानुपपत्त्या जीवस्यागण्य
गुणाश्रयत्वे नारायणस्याल्पगुणाश्रयत्वे वा वक्तव्ये जीवेऽल्पगुणाश्रयत्वस्य "अह-
मज्ञोऽशक्त" इत्यादिप्रत्यक्षसिद्धत्वेन तद्विरोधेन तस्यागण्यगुणाश्रयत्वासम्भवादिति
चेत् । अत्र ब्रूमः । श्रुत्यादेर्जीवब्रह्मैक्यप्रतिपादकत्वेऽपि कर्मादाविव तत्र तात्प-
र्याभावेन जीवब्रह्मैक्यस्य श्रुतितात्पर्यविषयत्वस्यैवासिद्धत्वेन तदन्यथानुपपत्तेरेवाभा-
वेन तथा नारायणस्याल्पगुणाश्रयत्वस्य वक्तुमशक्यत्वात् । न चोपक्रमादितात्पर्य-
लिङ्गैः श्रुत्यादेर्जीवब्रह्मैक्यपरत्वसिद्ध्या तदन्यथानुपपत्तेस्सत्वात्तथा नारायणस्याल्प
गुणाश्रयत्वं सम्भवत्येवेति वाच्यम् । श्रुत्यादेर्जीवब्रह्मैक्यपरत्वे प्रेक्षावदनुपादेयत्वापत्त्या
तत्परताया एवासम्भवात् । न च श्रुत्यादेर्भेदपरत्वे प्रेक्षावदुपादेयत्ववदभेदपर-
त्वेऽपि प्रेक्षावदुपादेयत्वसम्भवेनाऽऽपाद्यं प्रत्यापादकस्याप्रयोजकत्वेनाऽऽपाद्यापाद-
कयोर्व्याप्तेरेवाभावात्कथमेतदापादनमिति वाच्यम् । शास्त्रस्यैक्यप्रतिपादकत्वे
विषयादिशून्यत्वापत्त्या विषयादिशून्यत्वस्य च प्रेक्षावदनुपादेयत्वेन सहप्राप्तेर्वादि
प्रतिवादिसम्मतत्वेन यदि शास्त्रमैक्यप्रतिपादकं स्यात् तदा विषयादिशून्यं
स्यात् । यदि च विषयादिशून्यं स्यात्तदा प्रेक्षावदनुपादेयं स्यादित्यैक्यप्रति-
पादकत्वेन विषयादिशून्यत्वमापाद्य विषयादिशून्यत्वेन प्रेक्षावदनुपादेयत्वस्या

पाद्यमानत्वेनाप्रयोजकत्वस्य वक्तुमशक्यत्वात् । न च श्रुत्यादेर्भेदपरत्वे विषयादिशून्यत्वाभाववदभेदपरत्वेऽपि विषादिशून्यत्वाभावः किं न स्यादिति वाच्यम् । सामान्यतो ज्ञातस्य विशेषाकारेणाज्ञातस्यैव विषयत्वात् अज्ञाननिवृत्तेश्च प्रयोजनत्वात् । अज्ञानिन एवाधिकारित्वात् । विषयादीनां चाज्ञानसापेक्षत्वात् । भेदवादेऽज्ञानसम्भवेन तत्सापेक्षविषयादेस्सम्भवेऽप्यद्वैतवादेऽज्ञानासम्भवेन तत्सापेक्षविषयाद्यभावोपपत्तेः । न च भेदवाद इवाभेदवादेऽप्यज्ञानसम्भवः किं न स्यादिति वाच्यम् । अस्यात्राज्ञानमिति प्रतीत्या अज्ञानस्याश्रयविषयव्याप्तत्वेन भेदवादे जीवस्यैवाज्ञानाश्रयत्वेन ब्रह्मगतविशेषस्याज्ञानविषयत्वेन आश्रयविषययोर्विद्यमानत्वेन तद्व्याप्तस्याज्ञानस्य सम्भवात् । अद्वैतवादिमते स्वाश्रयविषययोरभावेन तद्व्याप्तस्याज्ञानस्याप्यसम्भवात् । तत्र तन्मते न तावदज्ञानस्य विषयोऽस्ति तथा हि अज्ञानस्य विषयो भवन् ब्रह्म वा स्यात् उत ब्रह्मगतविशेषो वा स्यात् । तत्र न तावदाद्यः । ब्रह्मणः स्वप्रकाशत्वेन नित्यसिद्धत्वेन तस्य विषयत्वानुपपत्तेः । नद्वितीयः । त्वन्मते ब्रह्मणो निर्विशेषत्वेन ब्रह्मगतविशेषाभावेन तस्याज्ञानविषयत्वानुपपत्तेः । नाप्यज्ञानस्याश्रयोऽस्ति । तत्राप्यज्ञानस्याश्रयो भवन् ब्रह्मातिरिक्तं वा स्यात् ब्रह्म वा स्यात् । तत्र नाद्यः । त्वया ब्रह्मातिरिक्तस्य सर्वस्याज्ञानकार्यत्वाङ्गीकारेण तस्य चाज्ञानाश्रयत्वे प्रोच्यमाने अज्ञानसिद्धौ तत्कार्यब्रह्मातिरिक्तसिद्धिः । ब्रह्मातिरिक्तसिद्धावाश्रयसिध्द्या तदाश्रिताज्ञानसिद्धिरित्यन्योन्याश्रयापत्तेः । न द्वितीयः । ब्रह्म कदाचित् किंचिद्विषयकाज्ञानवन्न सदा सर्वज्ञत्वादित्यनुमानेनाज्ञानाश्रयत्वाभावस्यैव सिद्धत्वेनाज्ञानाश्रयत्वे प्रोच्यमानेऽनुमानबाधापत्तेः । नन्वत्रानुमाने यत्सर्वज्ञं तदज्ञं नेत्यन्वयव्याप्तिर्वा स्यात् । यदज्ञं तत्सर्वज्ञं नेति व्यतिरेकव्याप्तिर्वा स्यात् । तत्र नाद्यः । द्वैतवादे ब्रह्मातिरिक्तस्य सर्वज्ञस्याभावेनान्वयदृष्टान्ताभावेनान्वयव्याप्तेरसम्भवात् । न द्वितीयः । अद्वैतवादे ब्रह्मातिरिक्तस्याज्ञानाश्रयत्वे प्रोच्यमाने अन्योन्याश्रयापत्त्या व्यतिरेकदृष्टान्ताभावेन व्यतिरेकव्याप्तेरप्यसम्भवात् । तस्मादुभयथाऽपि व्याप्तेरभावात् सर्वज्ञत्वहेतुर्व्याप्यत्वासिद्ध इति चेन्न यत्सर्वज्ञं तदज्ञं नेति विशेषव्याप्तेरभावेऽपि यो यत्र ज्ञानवान् स तत्राज्ञानवान्नेति सामान्यव्याप्तावस्मदादीनां दृष्टान्तत्वसम्भवेन व्याप्यत्वासिद्धेर्वक्तुमशक्यत्वात् । न च ब्रह्मणः



सर्वज्ञत्वं प्रमाणतो वा स्यात् भ्रांत्या वा स्यात् । स्वरूपभूतप्रज्ञया वा स्यात् । तत्र नाद्यः । प्रमाणतस्सर्वज्ञत्वे प्रोच्यमाने तस्य प्रमातृत्वापत्त्या प्रमातृत्वस्य च प्रमाकर्तृत्वरूपत्वेन तस्य च निर्विकारे परमात्मन्यसम्भवेन प्रमाकर्तृत्वघटकत्वेनाज्ञानस्यावश्यमङ्गीकार्यत्वात् । न द्वितीयः । भ्रान्त्या सर्वज्ञत्वे प्रोच्यमाने भ्रमस्याज्ञानकारणकत्वेन कारणीभूताज्ञानेन विना भ्रमस्यासम्भवेन भ्रमकारणत्वेनाज्ञानस्यावश्यमङ्गीकर्तव्यत्वात् । न तृतीयः । स्वरूपभूतप्रज्ञया सर्वज्ञत्वे प्रोच्यमाने "असङ्गो ह्ययं पुरुष" इति श्रुत्या ब्रह्मस्वरूपस्यासङ्गत्वप्रतिपादनात् । असङ्गस्य च पदार्थैस्सह सम्बन्धाभावेन पदार्थज्ञानानुपपत्त्या पदार्थज्ञानार्थं सम्बन्धघटकत्वेनाज्ञानस्यावश्यमङ्गीकार्यत्वात् । तस्मात्पक्षत्रयेऽपि सर्वज्ञत्वहेतोरज्ञानाश्रयत्वसाधकत्वेनाज्ञानाश्रयत्वाभावसाधकत्वाभावेन नित्यत्वसाधककृतकत्वहेतुवद्विरुद्धत्वं स्यादिति वाच्यम् । स्वरूपभूतप्रज्ञयैव सर्वज्ञत्वांगीकारेणोक्तदोषाभावात् । न च "असङ्गो ह्ययं पुरुष" इति श्रुत्या ब्रह्मस्वरूपस्यासङ्गत्वप्रतिपादनादसङ्गस्य च पदार्थैस्सह सम्बन्धाभावेन पदार्थज्ञानानुपपत्त्या पदार्थज्ञानार्थं सम्बन्धघटकत्वेनाज्ञानस्यावश्यमङ्गीकार्यत्वादित्युक्तमिति वाच्यम् । ब्रह्मणो व्यापकत्वाभावप्रसङ्गेनासङ्गत्वश्रुतेः सर्वथा सम्बन्धाभावपरत्वानुपपत्त्या तत्तत्कर्मकृतफललेपाभावमात्रपरत्वस्यावश्यमङ्गीकार्यत्वेनाज्ञानं विनापि विषयसम्बन्धसम्भवेन तदुपपादकत्वेनाज्ञानस्यानपेक्षितत्वात् । ननु ब्रह्मणः सर्वज्ञत्वेनाज्ञानाश्रयत्वासम्भवेऽपि त्वन्मत इव मन्मतेऽपि जीवस्यैवाज्ञानाश्रयत्वसम्भवात् न मन्मते अज्ञानासम्भव इति चेन्न । त्वन्मते जीवब्रह्मणोरभेदेन ब्रह्मणस्सर्वज्ञत्वेन तदभिन्नस्य जीवस्यापि सर्वज्ञत्वापत्त्याऽज्ञानाश्रयत्वासम्भवात् । न च बिंबप्रतिबिंबयोस्स्वाभाविकैक्ये विद्यमानेऽपि दर्पणाद्युपाधिनिमित्तभेदात् बिंबस्यावदातत्वेऽपि प्रतिबिंबस्य श्यामत्ववत् जीवब्रह्मणोस्स्वाभाविकैक्ये विद्यमानेऽप्यौपाधिकभेदवशात् ब्रह्मणस्सर्वज्ञत्वेऽपि जीवस्याज्ञानाश्रयत्वं सम्भवत्येवेति वाच्यम् । त्वन्मते उपाधेरेवासम्भवेनौपाधिकभेदस्याप्यसम्भवात्तदाश्रयणेन जीवस्याज्ञानाश्रयत्वव्यवस्थापनानुपपत्तेः । तथा हि जीवब्रह्मणोर्भेदक उपाधिः किमकल्पितो वा स्यात् कल्पितो वा स्यात् । नाद्यः । त्वन्मते ब्रह्मातिरिक्तस्य सर्वस्याप्यज्ञानकल्पितत्वांगीकारेण ब्रह्मातिरिक्तस्योपाधेरकल्पितत्वे प्रोच्यमानेऽपसिद्धा-

न्तापत्तेः । न द्वितीयः । उपाधेरज्ञानकल्पितत्वे तत्कल्पकस्याज्ञानस्योपाध्यंतरसापेक्ष-
त्वेनाज्ञानोपाधिपरंपरायामाश्रीयमाणायामनवस्थापत्तेः । न च बीजांकुरपरं-
परावदज्ञानोपाधिपरंपराया अप्यदूषणत्वमिति वाच्यम् । बीजांकुरपरंपरायाः सिद्ध-
विषयत्वेनानवस्थायास्तत्र दूषणत्वाभावेऽप्यज्ञानोपाधिपरंपराया असिद्धविषयत्वे-
नानवस्थायास्तत्र दूषणत्वोपपत्तेः । न चाहमज्ञ इत्यादिप्रतीतिसिद्धाज्ञानान्यथानुप
पत्त्याऽज्ञानोपाधिपरंपराऽवश्यं कल्पनीयेति वाच्यम् । जीवब्रह्मणोरात्यन्तिकभेदेनैवा-
ज्ञानप्रतीतेरुपपन्नत्वेन तदन्यथानुपपत्तेरेवाभावेन तयाऽज्ञानोपाधिपरंपरायाः कल्प-
यितुमशक्यत्वात् । न चाज्ञानोपाधिव्यक्तिद्वयस्यैवाङ्गीकारेण परंपराया एवाभावा-
न्नानवस्थेति वाच्यम् । तथात्वे उपाधेरज्ञानसिध्द्यधीनत्वेनाज्ञानसिद्धेश्चोपाधिसि-
ध्द्यधीनत्वेनान्योन्याश्रयापत्तेः । न चाज्ञानसिद्धेर्भेदसिध्द्यधीनत्वेनोपाधिसिध्द्यधीन-
त्वाभावान्नान्योन्याश्रय इति वाच्यम् । तथात्वे अज्ञानसिद्धेर्भेदसिद्धिद्वारा
उपाधिसिध्द्यधीनत्वेऽन्योन्याश्रयपरिहाराभावात् । न चाज्ञानसिद्धेर्भेदसिद्धि-
द्वारा उपाधिसिध्द्यधीनत्वेऽपि साक्षादुपाधिसिध्द्यधीनत्वाभावान्नान्योन्याश्रय इति
वाच्यम् । तथात्वे उपाधिसिद्धेरज्ञानसिध्द्यधीनत्वेनाज्ञानसिद्धेर्भेदसिध्द्यधीनत्वेन
भेदसिद्धेश्चोपाधिसिध्द्यधीनत्वेन चक्रकापत्तेः । न चाज्ञानस्यैवोपाधितयाऽङ्गीकारेण
भेदस्यैवाभावान्नान्योन्याश्रयादिकमिति वाच्यम् । तथात्वे उपाधितयाऽङ्गीक्रियमाणम-
ज्ञानमज्ञानाकल्पितं वा स्यात् उताज्ञानकल्पितं वा स्यात् । नाद्यः । त्वन्मते ब्रह्माति-
रिक्तस्य सर्वस्याप्यज्ञानकल्पितत्वेन ब्रह्मातिरिक्तस्याज्ञानस्याकल्पितत्वे प्रोच्यमानेऽ
पसिद्धान्तापत्तेः । न द्वितीयः । तत्राप्युपाधितयाऽङ्गीक्रियमाणमज्ञानं तेनैवाज्ञानेन
कल्पितं स्यादज्ञानांतरेण वा । नाद्यः । अज्ञानस्य तेनैवाज्ञानेन कल्पितत्वे आत्मा-
श्रयापत्तेः । द्वितीयेऽपि तदप्यज्ञानं प्रथमाज्ञानेन कल्पितमज्ञानांतरेण वा । नाद्यः ।
प्रथमाज्ञानकल्पकस्याज्ञानांतरस्याज्ञानकल्पितत्वे प्रोच्यमानेऽन्योन्याश्रयापत्तेः ।
द्वितीये तदप्यज्ञानं पूर्वाज्ञानेन कल्पितमज्ञानांतरेण वा । नाद्यः । तथात्वे चक्रका-
पत्तेः । नापि द्वितीयः । एवमज्ञानपरंपरायामाश्रीयमाणायामनवस्थाप्रसङ्गात् ।
न च मन्मते जीवब्रह्मभेदाज्ञानयोरनादित्वाङ्गीकारेण भेदस्याज्ञानाधीनत्वेऽप्यज्ञान-
...त्वाभावान्नात्माश्रयादिकं दूषणमिति वाच्यम् । भेदस्याज्ञानकृतोपकाराभावे

के. वादिराज



तदधीनताया एवासम्भवेन तत्कृतोपकारस्यावश्यं वाच्यतया तत्प्रतिबन्धकत्वेना-
त्माश्रयादेर्दूषणत्वसम्भवात् । न चात्माश्रयादेरुत्पत्त्यादिप्रतिबन्धकत्वेनैव दूषण-
त्वात् । प्रकृते चोत्पत्त्यादिप्रतिबन्धकत्वाभावान्नात्माश्रयादिकं दूषणमिति वाच्यम् ।
विनिगमकाभावेऽप्युत्पत्त्यादिप्रतिबन्धकत्वेनैव दूषणत्वं न प्रवृत्त्यादिप्रतिबन्धक-
त्वेनेति नियमाङ्गीकारे प्रवृत्त्यादिप्रतिबन्धकत्वेनैव दूषणत्वं नोत्पत्त्यादिप्रति-
बन्धकत्वेनेति विपर्ययस्यापि प्रसक्तथोक्तनियमासम्भवेनोत्पत्त्यादिप्रतिबन्धकत्वे-
नेव प्रवृत्त्यादिप्रतिबन्धकत्वेनाप्यात्माश्रयादेर्दूषणत्वस्यावश्यं वक्तव्यत्वेन प्रकृते चो-
त्पत्त्यादिप्रतिबन्धकत्वासम्भवेऽपि प्रवृत्त्यादिप्रतिबन्धकत्वसम्भवेनाऽऽत्माश्रयादे-
र्दूषणत्वसम्भवात् । यच्चोक्तं बिंबप्रतिबिंबयोः स्वाभाविकैक्येऽप्यौपाधिकभेदवशात्
बिंबस्यावदातत्वेऽपि प्रतिबिंबस्य श्यामत्ववज्जीवब्रह्मणोः स्वाभाविकैक्येऽप्यौपाधिक-
भेदवशात् ब्रह्मणः सर्वज्ञत्वेऽपि जीवस्याज्ञानाश्रयत्वं सम्भवत्येवेति । तत्र साधक-
प्रमाणाभावेन बाधकप्रमाणसद्भावेन च बिंबप्रतिबिंबयोरैक्याभावस्यान्यत्र व्युत्पा-
दितत्वेन दृष्टांतस्यैवासिध्द्या दार्ष्टांतिकस्य सुतरामप्रसिद्धेः । तस्मादुपाधेस्त्वन्मतेऽ
सम्भवेनौपाधिकभेदस्य सुतरामसम्भवेन तदाश्रयेण जीवस्याज्ञानाश्रयत्वस्य वक्तुमश-
क्यत्वेन व्यापकीभूतस्याश्रयादेरसम्भवेन तद्व्याप्यस्याज्ञानस्याप्यसम्भवेन तदधीनस्य
विषयादेरसम्भवेन शास्त्रस्यैक्यपरत्वे विषयादिशून्यत्वेन प्रेक्षावदनुपादेयत्वापत्त्या
जीवब्रह्मैक्यस्य श्रुतितात्पर्यविषयत्वस्यैवासिद्धत्वेन तदन्यथानुपपत्तेरेवाभावेन तया
नारायणस्याल्पगुणाश्रयत्वस्य वक्तुमशक्यत्वेन युक्तमेव तस्यागण्यगुणाश्रयत्वप्रति
ज्ञानम् ॥

इति श्रीमद्भाविसमीरश्रीवादिराजपूज्यचरणविरचितः द्वितीयोपन्यासस्समाप्तः ॥

---

॥ श्रीः ॥

॥ श्रीहयवदनाय नमः ॥

॥ श्रीमद्भाविसमीरवादिराजगुरुभ्यो नमः ॥

# उपन्यासरत्नमाला ।

---

## फलोपन्यासः ।

**करणपालनशील नते स्थितिं जलजनाभवदन्तिकमाश्रिताः ।**
**विदुरमी वरदामधरोदरप्रियजुषो यजुषोऽग्निबलानिव ॥** (रु.वि.१७-१२)

इति रुग्मिणीशविजयस्थं पद्यम् । अनेन हि पद्येन त्रिविधजीवानां स्वभावत्रयं तदुचितफलत्रयं चोक्तम् । तथाहि । **करणपालनशील**=सृष्टिरक्षण स्वभाव, हे **जलजनाभ**=कृष्ण! **वरदामधरोदरप्रियजुषः**=प्राड्मात्रा वरेण दाम्ना बद्धोदरस्य तव प्रियजुषः प्रियमेव कुर्वाणाः, **जलाः**=जडाः, **जनाः**=मूर्खजनाः दुजना येभ्यस्ते जडीकृतदुर्जना इत्यर्थः । **अमी**=द्वारकास्थिताः परमवैष्णवाः **नते**=नम्रे रमाब्रह्मादिचेतनजने अधिकरणे, **स्थितिं**=नियामकतयाऽवस्थानं ष्ठा गतिनिवृत्ता-विति धातोराधाराधेयभावेन हृद्यवस्थानं मुक्तावपि न निवर्तत इति सूचयितुं "वितन्वताऽजस्य सतीं स्थितिं हृदि" इति स्पष्टभागवतवाक्यमुक्तार्थे प्रमाणीकर्तुं च स्थितिमित्युक्तम् । **वदन्ति**=स्वशिष्यान्प्रत्युपदिशन्ति, **विदुश्च**=मुक्तौ संसारे च रमाब्रह्मादिसर्वचेतनानां भगवान् नियामकतया सर्वदा सर्वोत्तम एवाधाराधेयतया तेषां हृदि स्थित एव नतु कदाप्येतै रेकीभूतश्चेति जानन्ति उपदिशन्ति च । कथमिव, **यजुषः**=यजुर्वेदात् **अग्निबलानिव**=यज्ञानिवं यजुर्वेदस्य यज्ञतन्त्रत्वा-दिति सज्जीवानां स्वभावः कथितः । **भवतः**=वैकुण्ठादिलोकत्रयस्थितस्य तव अन्तिकं समीपं, **आश्रिताः**=सम्यक् श्रिताः सायुज्यं च सूचयितुमाङित्युप सर्गः । अस्तिभवत्योस्सर्वत्रान्वयात् भविष्यन्तीति तेषां फलं चोक्तमित्येका योजना ॥ १ ॥

भवः=शिवः, दन्ती=विनायकः, **को**=ब्रह्मा सूर्यश्च, **मा**=शक्तिरूपा लक्ष्मीः भवदन्तिकमाः, ता एव आ सम्यक् परदेवतात्वेन **श्रिताः** शैव-गाणपत्य



ब्राह्म सौर-शाक्तादिदुर्मतावलम्बिनः त ऐहिकसम्पदा **अधरोदरप्रियजुषः**=उदरादधरस्य शिश्नस्य उदरस्य च प्रियं कुर्वाणाः, **जलजनाः**=मूर्खजनाः मिथ्याज्ञानिनः, **अयजुषः**=यजुर्वेदरहिताः, **अग्निबलानिव**=यज्ञानिव ते=तव, **वरदां स्थितिं**= सर्वोत्तमत्वं, न विदुरित्यधमजीवस्वभावो दर्शितः । **भवन्**=सर्वदा वर्तमानः **अन्तो**= नाशः शस्त्याद्यस्त्रपातेन हिंसेत्यर्थः । सोऽस्य वर्तत इति भवदन्ति, तच्च तत्कं= शिरश्च भवदन्तिकं जात्येकवचनं, अन्धे तमसि पाते सति नानाशस्त्रघातैस्सदा ताड्यमानानि स्वस्वरूपभूतशिरांसीत्यर्थः । **आ** सम्यक् आ अनन्तकालपर्यन्तंच श्रिता भविष्यन्तीत्यधमजीवानां फलं चोक्तमिति द्वितीया योजना ॥ २ ॥

**अधरोदरप्रियजुषः**=शिश्नोदरपरायणाः, **जलजनाः**=कदाचिज्जला मिथ्याज्ञानिनः कदाचिज्जानन्तीति **जनाः** तत्त्वज्ञानिनश्च सन्तः कदाचिद्वैष्णव-समागमे सति भवतोऽन्तिकमाश्रितास्त्वामेव सेवमाना इति यावत् । कदाचिन्मि-थ्याज्ञानिनां समागमे शैवसमागमे भवं=गाणपत्यसमागमे दन्तिनं=ब्राह्मसौर-समागमे कं=शाक्तसमागमे मांचाऽऽश्रिता इति कृत्वा ते वरदां स्थितिं=अवस्थां यजुषोऽग्निबलानिव विदुः कदाचिज्जानन्ति अ ***यजुषोऽग्निबलानिव विदुः कदा-चिन्नजानन्तीत्यर्थः** । ज्ञानस्यैव कादाचित्कत्वात् विषयभोग एव तेषां भूयानिति ज्ञापनायाधरोदरप्रियजुष इति प्राग्विशेषणमुक्तम् । अनेन मध्यमजीवानां स्वभावो वर्णितः । उदरप्रियं सुखं तस्मादधरमधमं दुःखं, "सुखस्यानन्तरं दुःखं दुःख-स्यानंतरंसुख"मिति वचनात् सुखादधस्ताद्विद्यमानं जुषन्त इति ते तथोक्ताः । ज्ञानानुसारेण लिङ्गभङ्गे जातेऽपि स्वस्वरूपभूतसुखदुःखे क्रमेण भुञ्जाना इत्यर्थः । एत-देव स्पष्टयितुमुक्तं भवदन्तिकमाश्रिता इति । **भवन्**=जायमानः **अन्तो**=ऽवसानमस्ती-ति भवदन्ति तच्च तत्कं सुखं—भवदन्तिकं स्वानुभवसमये व्यक्त्यात्मना स्थितं दुःखा-नुभवसमये ईशेच्छया शक्त्यात्मना स्थितं चेत्यर्थः । आ समन्तात् सर्वत्रेत्यर्थे । "त्रिदिव-निरयभूगोचराणि"त्युक्तेः । लिङ्गभङ्गानन्तरमपि स्वर्गस्थितावनित्यकेवलसुखानुभवि-

---

*इदं भिन्नं पदं नञर्थकं विदुरित्यनेन सम्बध्यते । अतो न जानन्तीति मूललभ्य एवायमर्थः । तत्र विदुः अ विदुरित्यनयोरर्थयोर्विरोधपरिहाराय कदाचि-दिति पूरितं ग्रन्थकारेणेति सहृदयैराकलनीयम् ॥

तृस्वर्गिवत् स्वरूपभूतसुखमेवानुभवन्तो नरकस्थितिदशायामनित्यदुःखमात्रानुभवितृनारकिवत् स्वरूपभूतदुःखमेवाश्नन्तो भूस्थितिदशायामनित्यसुखदुःखभोक्तृभूस्थमनुष्यादिवत् कदाचित्स्वरूपसुखं कदाचित्स्वरूपदुःखं चानुभवन्त इति मध्यमजीवानां फलं स्थानं चोक्तं भवतीति तृतीया योजना ॥ ३ ॥

समुदायाभिप्रायस्तु केवलं सर्वोत्तमविष्णुभक्तास्स्वरूपभूतनित्यसुखमात्रानुभविन ऊर्ध्वलोकस्थाश्चेति त्रेधाऽप्युत्तमजीवा उत्तमाः । अधमजीवास्तु विष्णोरधमजीवानुवर्तिनः स्वरूपभूतदुःखमात्रानुभविनः सर्वतोऽप्यवाचीने तमस्येव स्थिता इति त्रेधाप्यधमजीवा अधमाः । मध्यमजीवास्तु कदाचित्सर्वोत्तमं विष्णुं कदाचित्ततोऽधमान् रमादींश्च परदेवतात्वेन सेवमानाः स्वरूपभूतसुखदुःखाख्यमध्यमफलानुभविनःस्वर्गनरकभूलोकाख्यमध्यमस्थानस्थिताश्चेति त्रेधापि मध्यमजीवा मध्यमा इति विवेचनीयम् । नच वाच्यं पदचमत्कारलब्धोऽप्ययं त्रिविधोऽर्थः प्रमाणाभावात्कथमादरणीय इति । यौक्तिकेन युक्तिसिद्धेऽर्थे पृथक्प्रमाणानपेक्षणात् । तथाहि—अस्ति तावन्मुक्ताश्चेतनाः नित्यसुखमात्रानुभवरूपा इति परस्यापि मतम् । चेतनस्वरूपभूतनित्यसुखानुभवात्मिका मुक्तिश्च 'विद्यैव तु निर्धारणा'दिति ब्रह्मसूत्रेण यथेच्छसम्भवदन्वयमेवकारं पुरस्कृत्याऽऽगतां 'कर्मणैव हि संसिद्धिमास्थिता जनकादय' इति स्मृतिमपेक्ष्य स्वोक्तविद्याख्यसाधनं निर्धारयतस्सूत्रकृतोऽभिप्रेतया अयोगव्यवच्छेदान्ययोगव्यवच्छेदात्यन्तायोगव्यवच्छेदाख्यार्थत्रयसाधारणमेवकारं विहाय 'नान्यः पन्था अयनाय विद्यत' इति साक्षात्तदर्थभूतस्वापेक्षितान्ययोगव्यवच्छेदमेव स्पष्टं स्वीकृतवत्या अत एव निरवकाशया "तमेवं विद्वानि"ति श्रुत्या च तं='श्रीश्च ते लक्ष्मीश्च पत्न्या'विति सूक्तान्ते स्पष्टदृष्टलिङ्गं पुरुषनामकनारायणं एवं='उतामृतत्वस्येशानः' । 'अतो ज्यायांश्च पूरुषः'—इत्यादिनाऽस्मिन्न सूक्ते स्पष्टमुक्तसर्वोत्तमत्वादिप्रकारेण विद्वानमृतो भवतीति विष्णुसर्वोत्तमत्वज्ञानाख्यतत्वज्ञानसाध्येत्यपि सिद्धम् । एवं च सर्वतोऽप्यूर्ध्वगतिरूपमुक्तेस्साक्षाद्विरुद्धे सर्वतोऽप्यधोगतिरूपेऽन्धेतमसि पतिता जीवाः मुक्तिविरुद्धनित्यदुःखमात्रानुभवात्मकाः बलाद्वक्तव्याः । सा च तेषां गतिः मुक्तिसाधनत्वेनोक्तविष्णुसर्वोत्तमत्वज्ञानरूपतत्वज्ञानात् विपरीतशिवसर्वोत्तमत्वज्ञानादिरूपमिथ्याज्ञानसाध्याच तद्वदेव बला-



द्वाच्या । नच तादृशी गतिरेव नास्तीति वाच्यम् । 'ऊर्ध्वं गच्छन्ति सत्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः' इति गीतायां—सत्वस्था इत्यादित्रिविधजीवस्वभावानां च स्पष्टमुक्तेः । नच तामसानामेव कदाचित्सात्विकत्वसंभवादनियतेयं गतिरिति वाच्यं । "त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा । सात्विकी राजसी चैव तामसी चेति तां शृणु" इति तत्रैव गतित्रयस्यापि भगवतैवोत्तममध्यमाधमाख्यत्रिविधजीवस्वभावसंभूतत्वकथनेन कदाप्यन्यथाकर्तुमशक्यत्वात् । नहि स्वाभाविकस्यापि कदाचिदभावः सम्भवति । तथाच 'मध्ये तिष्ठन्ति राजसा' इत्युक्तमध्यमजीवाश्च मुक्तितमोयोग्योत्तमाधमजीववत् कदाचिदुत्तमत्वस्य कदाचिदधमत्वस्य च मध्यमत्वेन स्वरूपभूतसुखदुःखानुभवात्मकाः न्यायसाम्यादेवानिच्छतापि वाच्याः । अत एव सा गतिः कादाचित्कोत्कोभयविधसाधनसाध्या च सिद्धेति स्वोक्तार्थो यौक्तिक इति मन्यामहे ॥

सत्कर्मसाध्यायामत एव 'नास्त्यकृतः कृतेने'ति सन्मुक्तेः कर्मासाध्यनित्यपुरुषार्थमोक्षविलक्षणत्वेनानित्यायां स्वर्गाख्योर्ध्वगतावनित्यकेवलसुखेन सुखितावत्तद्विरुद्धदुष्कर्मसाध्यायामत एवानित्यायां नरकाख्याधोगतावनित्यकेवलदुःखेन दुःखितावत्सत्कर्मदुष्कर्मसाध्यायामत एवानित्यायां भूम्याख्यमध्यमगतावनित्याभ्यां सुखदुःखाभ्यां सुखितादुःखितावच्च तत्वज्ञानसाध्यायामत एव नित्यायां 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिने'त्यादिश्रुत्या 'आद्यस्स्थिरचराणां यो वेदगर्भः सहर्षिभि'रित्यादिस्मृत्या च तत्वज्ञानिश्रेष्ठसुरादिप्राप्यत्वेनोक्तायां स्वर्गादप्यूर्ध्वगत्यां मुक्तावतोऽप्याधिक्यावश्यंभावेन नित्यादुःखनित्यसुखरूपतां कथं न युक्तिरुत्तेजयेत् । 'अन्धं तमः प्रविशन्ति येऽविद्यामुपासत इति श्रुत्या 'अविद्यां' विद्यापदोदिततत्वज्ञानविरुद्धविद्यां मिथ्याज्ञानमिति यावत् । उपासते=सेवंते तत्रैवादरं कुर्वन्तीत्यर्थः । तेऽन्धं तमः प्रविशन्तीति मिथ्याज्ञानसाध्यतया स्पष्टमुक्तायाम् अस्ति तावत्तवापि मते मिथ्याज्ञानं त्वदभिलषिततत्वज्ञानविरुद्धज्ञानस्य मिथ्याज्ञानत्वावश्यंभावात् । नच तन्निष्फलं भवितुमर्हति तत्वज्ञानस्य तत्त्वापातेनानिर्मोक्षप्रसङ्गात् सामग्रीवैयर्थ्यायोगाच्च । नापि नरकमात्रफलम् । तत्वज्ञानस्यापि स्वर्गमात्रफलत्वापातादिति युक्त्या च मिथ्याज्ञानसाध्यत्वयोग्यायामत एव नित्यायाम्

'असुर्या नाम ते लोका अन्धेन तमसाऽऽवृता' इत्यादिश्रुत्या मिथ्याज्ञानिश्रेष्ठासुरादिप्राप्यत्वेनोक्तायामत एव नरकादप्यधमत्वयोग्यायां 'संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनादि'ति सूत्रे "एतेऽशुभकृतः संयमने प्रपतन्ति तत्र ह ये परद्विषो गुरुद्विषः श्रुतिद्विषस्तदवमन्तारः शठा मूर्खा इति ते वै ततोऽवरुह्य तमसि प्रपतन्ति नैवैत उत्तिष्ठन्तेऽपि कर्हिचिद्ध्रुवं वा एतदित्याहुरथ येऽन्ये ब्रह्मद्विषः स्तेनास्सुरापा इति ते वै तदनुभूयेमं लोकमनुव्रजन्ती"ति सूत्रसूचितश्रुतौ च स्पष्टं पुनः संयमिन्यामेव यातनाभोक्तृजीवेभ्य इतरेषां विस्तीर्णयातनानां जीवानां मध्ये केवलमिथ्याज्ञानात्परमनरकादधमत्वेनोक्तायां तमोरूपदुर्गतौ 'ततोऽप्याधिक्यावश्यंभावेन तत्र पतितानामसुर्या इति श्रौतपदसूचितासुरादीनां नित्यासुखनित्यदुःखरूपतां कथं न युक्तिरुत्तेजयेत् । इतरेषां केवलमिथ्याज्ञानितां चेत्यर्थः । उभयविधज्ञानसाध्यायामत एव नित्यायाम्–उत्तमाधमगत्योर्मध्यभागस्थितगीतोक्तमध्यमगतौ च स्थितानामुत्तमाधमजीवाभ्यां वैसादृश्याय कर्मसाध्यस्वर्गादिरूपजीवफलतो वैसादृश्याय च नित्यसुखदुःखस्वरूपतां कथं न युक्तिरुत्तेजयेत् । सदसन्मिश्ररूपकर्मणामवैय्यर्थ्याय तत्फलत्रैविध्यस्याऽऽवश्यकत्वे सदसन्मिश्ररूपज्ञानानामपि त्रैविध्यं कुतो नापतेत् । न ह्युपेक्षाविषयत्वेन प्रसिद्धतृणादिकमपि पशूनामर्थे सृजन् भगवान् किमप्यफलं निर्मिमीते । अतस्तत्वविदग्रेसरो मध्वगुरुर्न युक्तिविधुरं कदाप्यवदत् । किंच, देवादयस्सज्जना नियमेन पुण्यशीला हर्येकपरायणाश्चेदानीं दृश्यन्ते । कदाचित् किञ्चित्तेष्वपि दृश्यमानमवश्यं स्फटिके लौहित्यमिव तदाविष्टासुरैरेव कृतमिति तत्पापपरम्परामूलमेव न स्वाभाविकम् । स्फटिकलौहित्यं स्फटिकावयवलौहित्यपरम्परामूलमतो न कुचोद्यावकाशः । दैत्यादयो दुर्जनाश्च नियमेन पापशीलास्शिवादिभजकाश्चेदानीं दृश्यन्ते । मनुष्याश्च प्रायः पुण्यपापाख्योभयस्वभावास्तत्र तत्र गमने सति तां तां देवतामेव सेवमाना इदानीं कर्मणः सर्वोत्पत्तिमन्निमित्तकारणत्वात् पापेन पुण्याजननात्, पुण्येन पापाजननाच्च इदानीं पुण्यशीला इदानीं क्रियमाणस्वपुण्यजननाय पूर्वजन्मनि पुण्यशीलाः ततस्ततः पूर्वमप्येवमित्यनादौ काले च पुण्यकरणस्वभावत एव कथं न स्वभावत एवोत्तमाः । अनयैव दिशा अधमाः कथं न स्वभावत एवाधमाः। मध्यमाश्च कथं न स्वभावत एव मध्यमाः। मनुष्येष्वपि



पुण्यैकरता हरिपरायणाः केचिदिदानीं दृश्यन्ते । त उत्तमकोटौ प्रविशन्ति । पापैकरतास्तूक्तयुक्त्या घोरतमाधमकोटौ प्रविशन्ति। देवादिष्वेवाभिनिवेशवन्तश्च मध्यमकोटावित्यपि विवेको द्रष्टव्यः । एवं च जीवत्रयस्योत्तमत्वादिविरुद्धत्रिविधस्वभावस्य चैकविधफलायोगात्स्वभावत्रयोचितं फलत्रयं च कथं न युक्तेः प्रभावः सम्भावयेत् । अत एव मध्यमजीवानां न लिङ्गदेहभङ्गोऽस्तीति मन्दाशङ्कापि न युक्तिसहा । उत्तमाधमसामग्रीव मध्यमस्यापि सामग्री कृतलिङ्गदेहभङ्गात् स्वाभाविके तत्स्वरूपसुखदुःखे अनुभावयेदेव सामग्र्याः कार्यजकत्वनियमस्य सर्ववादिभिरङ्गीकृतत्वात् । अन्यथा कृतहानिप्रसङ्गात् । कथं चान्यथाऽनित्याभ्यां सुखदुःखाभ्यां तेषां नित्यसंसारित्वं? । नहि प्रवाहतोऽनित्या घटाद्या नित्या इत्युच्यन्ते । एवं च "तनुभृत्स्वभावसम्भूतये" "सुखदुःखमध्यसम्प्राप्तये" "नित्यं सुखोपलब्धिः" नित्यं दुःखोपलब्धिः" "नित्यं सुखदुःखोपलब्धिः" "शुभास्तत्र हरिं ययुः" "असुरास्तु तमो घोरं यदि तत्रैव मध्यमाः । मध्यमां गतिमेवापुरि"त्याद्याः प्राचां वाचोऽपि समाहिताः । *"अन्यथाऽनुपपत्तिश्चास्य समाधानमि"त्युपलक्षणं । भूतचतुष्टयस्य तन्मात्राचतुष्टयस्य च मुखतोऽनुक्त्योपेक्षितत्वेन च भगवदधीनत्वेनावरत्वमित्यपि ज्ञेयं। "नासदासीन्नो सदासी"दित्यनेन "नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत्। किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम् । न मृत्युरासीदमृतं न तर्हि न राव्या अह्न आसीत्प्रकेत" इति श्रुतिखण्डत्रयं गृह्यते ॥ "मूर्तं सदिति सम्प्रोक्तममूर्तमसदुच्यते" इति स्मृतेस्सत्पदेन पृथिव्यप्तेजोरूपं भूतत्रयं–असत्पदेन वाय्वाकाशभूतद्वयं च ग्राह्यमिति भावेनाह "पञ्चभूतानि नासु"रिति । रजः पदं सत्वतमसोरुपलक्षणमिति भावेनाह "गुणत्रय"मिति। देहलीदीपन्यायेनोभयसंग्रहार्थं श्रुतौ मध्यपतितं रज एव गृहीतमिति ज्ञेयम् । पर इति वदता "पृ पालनपूरणयो"रिति धातोः कर्त्रर्थे असुन्प्रत्यये कृते सति पर इति सकारान्तं पदमिति सूचितम् । "न मृत्युरासीदि"ति श्रुतिखण्डस्यार्थमाह "मृत्यु"रित्यादिना । प्रकृष्टं केतः केतनं चिन्ह

*अत्रोक्तार्थस्थैर्याय जीवानामीश्वराधीनत्वादि दर्शयितुं स्वकृततत्वप्रकाशिकाटिप्पणगुर्वर्थदीपिकायां अध्या २ पाद १. अधि. ६. ७. स्थ वाक्यान्येवात्रोद्धरति ग्रन्थकार इत्युत्तरग्रन्थसङ्गतिस्सहृदयैराकलनीयेति ॥

मसाधारणधर्म इति भावेनाह "दिवाराऽयोश्च प्रभाव" इति । "किमावरीव" इति श्रुतिखण्डस्यार्थं "माहैतदभावादि"त्यादिना । एतदभावात् पृथिव्यादिभोगसाधनवस्त्वभावात् कुह कुत्र किं कस्य शर्मन् सुखार्थं आवरीवः आवर्तदित्यर्थष्टीकाकारस्याभिप्रेतः । "आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किंचनाऽऽस" इति श्रुतिखण्डार्थं कथयति "निवातमि"त्यादिना । अवातमित्यस्यार्थो "निवातमि"ति । स्वधयेत्यस्यार्थकथनं "स्वसामर्थ्ये"नेति । धीयते धार्यते अनया सर्वं जगदिति व्युत्पत्त्या स्वधापदेन स्वसामर्थ्यमुच्यते इति भावः । आनीदित्यस्यार्थकथन "मचेष्टते"ति । "अन-चेष्टाया"मिति धातोः लुङि रूपमिदम् । "तस्मादन्यत्पर आसे"त्यत्र पर उत्तममित्यर्थः । अन्यत्वार्थकथने प्रागुक्तान्यपदेन पौनरुक्त्यापत्तेः । "विकृतरूपविनाशे"त्यस्य विकृतरूपस्य स्थूलरूपस्य विनाश इत्यर्थः । आदिपदेनानुपकारित्वं गृह्यते । तमोऽभिमानित्वात् "तमु ग्लान" इति धातोः दुर्गारूपेण जगत्संहर्तृत्वाच्च श्रीरूपं सलिलं तमः पदेनोच्यते । प्रकृष्टं केतः केतनं निकेतनं स्थानं यस्येति व्युत्पत्तिमाश्रित्याह "अपरिमितमि"ति । प्रकृत्याख्यं श्रीरूपप्रकृत्याख्यमित्यर्थः । गूळहं गूढमित्यस्यार्थकथनं "गूहितमि"ति । "प्रपञ्चस्य ब्रह्मानन्यत्वे प्रमाणाभावादि"त्युपलक्षणम् । एवं सत्यादिपदोल्लङ्घने कारणाभावादल्पाक्षरत्वाच्च वाचादिशब्देभ्य इत्येव सूत्रप्रवृत्तिप्रसङ्ग इत्यपि द्रष्टव्यम् । "प्रमाणविरुद्धं चे"त्युपलक्षणम् । ब्रह्मात्मकपदेनैकत्र बाधः । अन्यत्राभेद इति विरम्यव्यापारप्रसङ्गश्च । "लोकसिद्धत्वादि"त्यस्य एकाकिराजापेक्षया स्वाधीनचतुरङ्गसैन्यसहितस्य राज्ञो महिमदर्शनादिति भावः । "शरीरेन्द्रियप्राणादिरि"ति वदता सूत्रगतादिपदेन शरीरेन्द्रियादिकं गृह्यत इति सूचितम् ॥२॥१॥६॥ "अन्यथाऽनुमितौ च ज्ञशक्तिवियोगादि"ति वक्ष्यमाणसूत्रस्यायमभिसन्धिः । अन्यथाऽनुमितौ प्रकृत्युपसर्जनपुरुषानुमितौ क्रियमाणायां च जानातीति ज्ञो जीवः । तस्य शक्तिवियोगात् शरीरप्रवेश एव स्वतः शक्त्यभावात् । भावे चान्यत्रापि स्वत एव प्रवृत्तिसंभवात् शरीरप्रवेशवैयर्थ्यमित्युभयथापि जीवकर्तृत्वं न घटते इति ॥ "पुनराशङ्कोदयादि"ति वदता "यथा प्राणादि"रिति सूत्रे प्राक् भगवतोऽनुप्रवेशः पुनराशङ्कोदय इति कथितः । स मास्तु । जीवानुप्रविष्टमेव शरीरं प्रवर्ततामिति पुनराशङ्कोदय इति सूचितम् । "विद्येते च ते जीव"इत्यत्र बहुकालं हिताकरणमहितकरणं चेत्यस्य



सुखेन जीवामीति यद्धितं तस्याकरणं मध्य एव मरणात् । भुञ्जानस्य यदृच्छया स्वजिह्वादंशनादिकं यदहितं तस्य करणं चेत्यर्थः । "इङ्गयत्यङ्गमङ्गानी"त्यत्र कृत्रिमप्रतिमाया एकैकावयवचलनमात्रे अपेक्षिते तदङ्गमेवेङ्गयति । नर्तनविशेषादौ सर्वाङ्गचालने अपेक्षिते अङ्गानीङ्गयतीति सम्बन्धः । "अन्नं रसादिरूपेणे"त्यत्र गोभिर्भुक्ततृणादिरूपमन्नं तदुदरे तिष्ठति । तस्यान्नस्य रसं "व्यानः सर्वशरीरग"इति वचनात् नाडीस्थितो व्यानः ऊधोभारे आनयति । एवं नारीभिर्भुक्तमन्नं तदुदरे तिष्ठति । तस्य च रसं ऊर्ध्वनाडीद्वारा तासां स्तनद्वये प्रवेशयति । गवां नारीणां चान्तरस्वातन्त्र्यात्तत्कर्तृत्वमिति भावः । "कार्योपसंहारकर्तृत्वानुपपत्तेरि"त्युपलक्षणं । कृषीवलानां योद्धॄणां राज्ञां वणिजां च मध्ये कार्यविच्छेददर्शनादित्यपि द्रष्टव्यं । "तस्या अनुपलब्धिबाधितत्वादि"त्यत्र तस्या ईश्वरसाधकश्रुतेरनुपलब्धिः क्वापि केनापि यईश्वरस्यानुपलम्भस्तद्बाधितत्वादित्यर्थः । न तु श्रुतेरेवानुपलम्भः । "तच्च प्रतिपादितमि"त्यत्राभिमान्यधिकरणे इति शेषः । "अविचारितरमणीयाऽविद्ये"त्यत्राविचारिते सति रमणीया, विचारिते सति अन्ततोऽघटितबहुप्रमेयघटितेत्यर्थः । सेश्वरवादेऽपि निरवयवत्वशब्दव्याकोपस्य कः परिहार इत्यतोऽपीदमुदितम् । "यद्धि युक्त्ये"ति ईश्वरस्याघटितघटकत्वशक्तेरीशशब्देनैव सूचितत्वात् । अनीशस्य तु जीवस्येश्वरविषय-[illegible]नमात्रात् स्वविनाशे प्राप्ते स्वात्मानमेव रक्षितुमप्यसमर्थस्य जीवस्य तदसम्भवाकश [illegible] । "योऽसौ विरुद्ध"इत्यत्राणुत्वमहत्त्वे यौगपद्येन कथ्यमाने यः परमात्मा दिति भावः [illegible] विरोधवान् "अणोरणीयान्महतो महीयान्" इत्यादिप्रमाणैरलोकदृष्ट्या विरुद्धः, [illegible] योग्यः "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" विरुद्धः । लोकदृष्ट्या मनुः मनन [illegible] "नाहं विदाम्यहममी मुनयः सुरेशा" इत्यादिप्रमाणैरमनुः, आन्तं मननायोग्यः, लोकदृष्ट्या वाक् वक्तुं योग्यः, "सन्त्यश्रुता अपि [illegible] शङ्का" । "यतो वाचो निवर्तन्त" इत्यादिप्रमाणैरवाक् आन्तं वक्तुमयोग्यः । लोकदृष्ट्या इन्द्रः "अशआद्यच्" इन्द्रवान् । कृष्णरामाद्यवतारेषु विश्वामित्रनारदादीनामभिवादनदर्शनात् । "मत्तः परतरं नान्यत्" "न दैवं केशवात्परं" इत्यादिप्रमाणैरनिन्द्रः न विद्यते इन्द्रो यस्येति विग्रहः । लोकदृष्ट्या प्रवृत्तिः प्रवर्तकत्वात् "नाहं किञ्चिदुपाश्रित"इत्यादिप्रमाणैरप्रवृत्तिरिति योजना । "नहि शब्दैकसमधिगम्ये"त्यनेन यथा शब्दो वक्ति तथैव सोऽङ्गीकार्यः । ननु लोकदृष्ट्या विरोधः शङ्कनीय इति सूचितं । "सर्वोपेता चे"

स्यत्र सर्वविषयिण्यः सर्वदा विद्यमानाश्च सर्वाः शक्तयस्ताभिः शक्तिभिरुपेतेत्यर्थः ।
"श्रुत्यनुसारेण स्त्रीलिङ्गप्रयोग" इत्यत्र "आत्मा ही"ति प्रागात्मनः प्रस्तुतत्वात् ।
अत्रापि सर्वोपेत इत्येव वक्तव्यं । स्त्रीलिङ्गपदप्रयोगस्तु "सर्वोपेते"ति श्रुत्यनुसारात्
"यदपस्पृधेथां त्रेधा सहस्रं वितदैरयेथामि"ति श्रुतिः स्पष्टं जीवानां त्रैविध्यमाह ।
हे इन्द्राविष्णू उभा उभौ युवां जिग्यथुः सर्वानसुरान् जितवन्तावभूतां । न परा-
जयेथे कदापि पराजयं नाप्नुथः । एनोरेनयोर्युवयोर्मध्ये कतरश्च कश्चन न पराजिग्ये
पराजयं नाप । हे विष्णो इन्द्रश्च त्वं चेत्युभौ अपस्पृधेथां दैत्यैस्सह स्पर्धामकुर्वाथाम्
इति यत्तत् तेन दैत्यैः सह स्पर्धाकरणेन स्पर्धां कृत्वा तद्बलेनेत्यर्थः । सहस्रमन-
न्तानंतजीवान् विशेषेण विविधतया विरुद्धतया चेति त्रेधा ऐरयेथां प्रेरयेथां
प्रेरणामकुर्वाथाम् । उत्तमजीवेषु ब्रह्मादिषु हरिसर्वोत्तमत्वबुद्धिं सुतरामैरयेथाम् ।
अधमेषु पुनः पुनः विरोधमेव ऐरयेथाम् । मध्यमजीवेषु दैत्यवधादिसमये हरेस्सर्वो-
त्तमत्वबुद्धिं वधात्प्राक् तेषां शिवदत्तसंपद्दर्शने सति जरासन्धादियुद्धेषु कदाचि-
ल्लीलया युवयोः पलायने च सति वरदातॄणां शिवादीनां सर्वोत्तमत्वबुद्धिं चेति त्रेधा
ऐरयेथाम् । यद्वा शिवादीनां वरादन्यैरवध्यदैत्यैः सह युवयोः तत्कृतजगदुपद्रवदर्श-
नेन प्रथमं सहिष्णुत्वरूपस्पर्धैवाजायत । नतु तदैव तद्वधोऽपि कृत इति
यत्तस्मात् तैरेवोपद्रुतानां तेषां वरदायकानां ब्रह्मशिवादीनामवध्यतद्वधे समर्थयोः
सर्वोत्तमयोर्युवयोः पृथिव्यादौ अवतारे सति सहावतारादौ च विशेषेण ब्रह्मादीनां
[illegible] बुद्धिमैरये-
थाम् । दैत्यादीनां तु अवतीर्णे स्वस्मिन् स्वभक्तेषु पाण्डवादिषु च [illegible] पुनः पुनर्विरोध-
करणाय मतिमैरयेथाम् । मध्यमजीवानां तु प्राक् दैत्यानां [illegible] प्राबल्ये साधूनां पराजये
च सति तैस्सह सख्येन वरदायकशिवादीनामुत्कर्षे बुद्धिं पुनस्तैरेवोपद्रुतानां तेषां
प्रार्थः सति तेष्वपकर्षबुद्धिं युष्मदुत्कर्षे [illegible] बुद्धिं चेति विविधमैरयेथामिति श्लोकोक्तः
सर्वोऽप्यर्थः [illegible] श्लोकाक्षयः इति सर्वमवदातम् । तस्माद्विरुद्धे गती परिजिहीर्षता
अनुकूलां स्वयोग्यगतिं मुक्तिं प्रेप्सुना च हरेस्तत्त्वनिर्णायकेषूक्तदशोपन्यासेषु
श्रद्धावता भाव्यम् । अतः पूर्णमतिना यतिना निरूपित एव शास्त्रार्थ इति
स्थितम् । इति फलोपन्यासः ।

वादिराजेन रचिता मालेयं विमला सदा ।
सदये हृदये धार्या हरिणा भववैरिणा ॥

इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचिता उपन्यासरत्नमाला समाप्ता